## चतुर्थः सर्गः

लङ्कायां वामपादप्रथमनिक्षेपणपूर्वं प्रविशन्हनुमान्नगरान्तर्वाद्यमाननानावादित्रादि शृण्वन्ननेकविधायुधधारिमूलबलं विलोकयन्नन्तःपुरमाविवेश ।

स निर्जित्य पुरीं लङ्कां श्रेष्ठां तां कामरूपिणीम्।
विक्रमेण महातेजा हनुमान् कपिसत्तमः।।5.4.1।।

अद्वारेण च महावीर्यः प्राकारमवपुप्लुवे।
निशि लङ्कां महासत्त्वो विवेश कपिकुञ्जरः।।5.4.2।।

प्रविश्य नगरीं लङ्कां कपिराजहितंकरः।
चक्रेऽथ पादं सव्यं च शत्रूणां स तु मूर्धनि।।5.4.3।।

प्रविष्टः सत्त्वसम्पन्नो निशायां मारुतात्मजः।
स महापथमास्थाय मुक्तपुष्पविराजितम्।।5.4.4।।

ततस्तु तां पुरीं लङ्कां रम्यामभिययौ कपिः।
हसितोत्कृष्टनिनदैस्तूर्यघोषपुरस्कृतैः।।5.4.5।।

वज्राङ्कुशनिकाशैश्च वज्रजालविभूषितैः।
गृहमेधैः पुरी रम्या बभासे द्यौरिवाम्बुदैः।।5.4.6।।

प्रजज्वाल तदा लङ्का रक्षोगणगृहैः शुभैः।
सिताभ्रसदृशैश्चित्रैः पद्मस्वस्तिकसंस्थितैः।।5.4.7।।

वर्धमानगृहैश्चापि सर्वतः सुविभूषितैः।
तां चित्रमाल्याभरणां कपिराजहितङ्करः।।5.4.8।।

राघवार्थे चरञ्श्रीमान् ददर्श च ननन्द च।
भवनाद्भवनं गच्छन् ददर्श कपिकुञ्जरः।।5.4.9।।

विविधाकृतिरूपाणि भवनानि ततस्ततः।
शुश्राव रुचिरं गीतं त्रिस्थानस्वरभूषितम्।।5.4.10।।

स्त्रीणां मदनविद्धानां दिवि चाप्सरसामिव।
शुश्राव काञ्चीनिनदं नूपुराणां च निःस्वनम्।।5.4.11।।

सोपाननिनदांश्चापि भवनेषु महात्मनाम्।
आस्फोटितनिनादांश्च क्ष्वेडितांश्च ततस्ततः।।5.4.12।।

शुश्राव जपतां तत्र मन्त्रान् रक्षोगृहेषु वै।
स्वाध्यायनिरतांश्चैव यातुधानान् ददर्श सः।।5.4.13।।

रावणस्तवसंयुक्तान् गर्जतो राक्षसानपि।
राजमार्गं समावृत्य स्थितं रक्षोगणं महत्।।5.4.14।।

ददर्श मध्यमे गुल्मे राक्षसस्य चरान् बहून्।
दीक्षिताञ्जटिलान् मुण्डान् गोजिनाम्बरवाससः।।5.4.15।।

दर्भमुष्टिप्रहरणानग्निकुण्डायुधांस्तथा।
कूटमुद्गरपाणींश्च दण्डायुधधरानपि।।5.4.16।।

एकाक्षानेकवर्णांश्च लम्बोदरपयोधरान्।
करालान् भुग्नवक्त्रांश्च विकटान् वामनांस्तथा।।5.4.17।।

धन्विनः खङ्गिनश्चैव शतघ्नीमुसलायुधान्।
परिघोत्तमहस्तांश्च विचित्रकवचोज्ज्वलान्।।5.4.18।।

नातिस्थूलान् नातिकृशान् नातिदीर्घातिह्रस्वकान्।
नातिगौरान् नातिकृष्णान्नातिकुब्जान्न वामनान्।5.4.19।।

विरूपान् बहुरूपांश्च सुरूपांश्च सुवर्चसः।
ध्वजिनः पताकिनश्चैव ददर्श विविधायुधान्।।5.4.20।।

शक्तिवृक्षायुधांश्चैव पट्टिशाशनिधारिणः।
क्षेपणीपाशहस्तांश्च ददर्श स महाकपिः।।5.4.21।।

स्रग्विणस्त्वनुलिप्तांश्च वराभरणभूषितान्।
नानावेषसमायुक्तान् यथास्वैरचरान् बहून्।।5.4.22।।

तीक्ष्णशूलधरांश्चैव वज्रिणश्च महाबलान्।
शतसाहस्रमव्यग्रमारक्षं मध्यमं कपिः।।5.4.23।।

रक्षोऽधिपतिनिर्दिष्टं ददर्शान्तःपुराग्रतः।
स तदा तद् गृहं दृष्ट्वा महाहाटकतोरणम्।।5.4.24।।

राक्षसेन्द्रस्य विख्यातमद्रिमूर्ध्नि प्रतिष्ठितम्।
पुण्डरीकावतंसाभिः परिखाभिः समावृतम्।।5.4.25।।

प्राकारावृतमत्यन्तं ददर्श स महाकपिः।
त्रिविष्टपनिभं दिव्यं दिव्यनादविनादितम्।।5.4.26।।

वाजिह्रेषितसङ्घुष्टं नादितं भूषणैस्तथा।
रथैर्यानैर्विमानैश्च तथा हयगजैः शुभैः।।5.4.27।।

वारणैश्च चतुर्दन्तैः श्वेताभ्रनिचयोपमैः।
भूषितै रुचिरद्वारं मत्तैश्च मृगपक्षिभिः।।5.4.28।।

रक्षितं सुमहावीर्यैर्यातुधानैः सहस्रशः।
राक्षसाधिपतेर्गुप्तमाविवेश गृहं कपिः।।5.4.29।।

स हेमजाम्बूनदचक्रवालं महार्हमुक्तामणिभूषितान्तम्।
परार्ध्यकालागुरुचन्दनार्हं स रावणान्तःपुरमाविवेश।।5.4.30।।

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे चतुर्थः सर्गः।।